नवग्रहपूजा – ग्रहाणां मुखाः- शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ । प्रत्यङ्मुखौ शनिसोमौ शेषा दक्षिणतो मुखाः ॥ अधिदेवताः- ईश्वरं भास्करे विन्द्यादुमां विद्यान्निशाकरे । स्कन्दमंगारके विन्द्याद्वुधे नारायणं विदुः ॥ गुरौ वेदनिधिं विन्द्यात् शुक्रे शक्रो विधीयते । शनैश्चरे यमं विन्द्याद्राहौ कालस्तथैव च । चित्रगुप्तोधिपः केतोरित्येता ग्रहदेवताः ॥ प्रत्यधिदेवताः- अग्निरापो धरा विष्णुरिन्द्रेन्द्राणी प्रजापतिः । सर्पो ब्रह्मा च निर्दिष्टा अधिदेवा यथाक्रमम् ॥ अधिप्रत्यधिदेवानां स्थानानि- अधिदेवा दक्षिणतो वामे प्रत्यधिदेवताः । स्थापनीयाः प्रयत्नेन व्याहृतिभिः पृथक् पृथक् ॥ ग्रहाग्निः- आदित्यः कपिलो नाम पिंगलः सोम उच्यते । धूमकेतुस्तथा भौमो जाठराग्निबुधः स्मृतः ॥ गुरोश्चैव शिखानाम शुक्रो भवति हाटकः । शनैश्चरो महातेजा राहुकेत्वोर्हुताशनः ॥ ग्रहसमिधः- अर्कः पलासः खदिर अपामार्गोऽथ पिप्पलः । उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥ ग्रहपञ्चलोकपालाः –विनायकं तथा दुर्गां वायुराकाशमेव च । आवाहयेद् व्याहृतिभिस्तथैवाश्विकुमारकौ ॥ सूर्यः- हस्ते रक्तपुष्पं गृहीत्वा श्रीसूर्यं स्मरेत् – प्रत्यक्षदेवं विशदं सहस्रमरीचिभिः शोभितभूमिदेशम् । सप्ताश्वगं सद् ध्वजहस्तमाद्यं देवं भजेऽहं मिहिरं

हृदब्जे । ॐ किरीटिनं पद्मासनं पद्मकरं पद्मगर्भसमद्युतिं सप्ताश्वं सप्तखड्गं कलिंगदेशजं काश्यपगोत्रं विश्वामित्रार्षं त्रिष्टुप् छन्दसं रक्ताम्बरधरं रक्ताभरणभूषितं रक्तगन्धानुलेपनं रक्तछत्रध्वजपताकिनं मुकुटकेयूरमणिशोभितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताग्निसहितं प्रत्यधिदेवतेश्वरसहितं रक्तवृत्तमण्डले पूर्वमुखमादित्यमावाहयामि । आवाहनादिकं विधाय प्राणान् प्रतिष्टाप्य ॐ दिवाकराय विद्महे प्रभाकराय धीमहि तन्नो सूर्यः प्रचोदयात् । ॐ आकृष्णेनेत्यस्य मन्त्रस्य हिरण्यस्तुप् ऋषिः त्रिष्टुप् छन्दः श्रीसूर्यो देवता सूर्यप्रीत्यर्थं पूजने विनियोगः । ॐ आकृष्णेन इत्यस्य मन्त्रस्य विश्वामित्र छषिः त्रिष्टुप् छन्दः सविता देवता सूर्यमहाग्रहपूजने विनियोगः । ॐ आकृष्णेन रजसा वर्तमानः अंगुष्ठाभ्यां नमः / हृदयाय नमः । ॐ निवेशयन् तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ अमृतं मर्त्त्यं च मध्यमाभ्यां वषट् / शिखायै वषट् । ॐ हिरण्ययेन अनामिकाभ्यां हुम् / कवचाय हुम् । ॐ सविता रथेना कनिष्ठाभ्यां वौषट् / नेत्राभ्यां वौषट् । ॐ देवोयाति भुवनानि पश्यन् करतलकरपृष्ठाभ्यां फट् / अस्त्राय फट् । ध्यानम् - सन्ध्या विद्रुमपद्मरागविलसत् बन्धुकपुष्पारुणं वन्द्यं काश्यपगोत्रमम्बरलसत् पद्मप्रभं निर्मलम् । तं

देवासुरमौलिघृष्टचरणं संसारबन्धच्छिदं भक्त्या नाथमिवाह्वयामि सकलं त्रैलोक्यनाथं रविम् ॥ ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् । आसनादि नैवेद्यान्तं पूजयेत् । पुष्पाञ्जलिः – ज्योतीश देव भुवनत्रय मूलशक्ते गोनाथ भासुर सुरादिभिरीद्यमान । नृणांश्च वीर्य वरदायक आदिदेव  आदित्यवेद्य मम देहि करावलम्बम् ॥ ग्रहाणामादिरादित्यो लोकरक्षणकारक । विषमस्थानसंम्भूतां पीडां हरतु मे रविः ॥ जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् । तमोऽरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ॥ चन्द्रः - हस्ते श्वेतपुष्पं गृहीत्वा श्रीचन्द्रं स्मरेत् –शंखप्रभमेणप्रियं शशांकमीशानमौलिस्थितमीड्यवृत्तम् । तमीपतिं नीरजयुग्महस्तं ध्याये हृदब्जे शशिनं ग्रहेशम् ॥ किरीटिनं श्वेताम्बरधरं दशाश्वं शेताभूषणं पाशपाणिं द्विवाहुं वनायुदेशजमत्रिगोत्रमात्रेयार्षमनुष्टुप्छन्दसं श्वेताम्बरधरं श्वेतगन्धानुलेपनं श्वेतछत्रध्वजपताकिनं मुकुटकेयूरमणिशोभितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताऽपसहितं प्रत्यधिदेवता उमासहितं चन्द्रार्धमण्डले प्रत्यङ्मुखं सोममावाहयामि । आवाहनादिकं विधाय

ॐ निशाकराय विद्महे क्षपाकराय धीमहि तन्नश्चन्द्रः प्रचोदयात् । ॐ इमं देवेत्यस्य मन्त्रस्य आत्रेयऋषिः अनुष्टुप्छन्दः चन्द्रो देवता चन्द्रमहाग्रहप्रीत्यर्थं पूजने विनियोगः । ॐ इमं देवा अंगुष्ठाभ्यां नमः / हृदयाय नमः । ॐ असपत्नं सुवध्वं तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ महते क्षत्राय महते ज्येष्ठाय मध्यमाभ्यां वषट् / शिखायै वषट् । ॐ महते जानराज्याय अनामिकाभ्यां हुम् / कवचाय हुम् । ॐ इमममुष्य कनिष्ठाभ्यां वौषट् / नेत्राभ्यां वौषट् । ॐ पुत्रममुष्यै पुत्रमस्यै विश करतलकरपृष्ठाभ्यां फट् / अस्त्राय फट् । ध्यानम् - मुक्ताहारमृणालचन्दनशरत् चन्द्रप्रभं निर्मलं कालिन्दिसलिलोद्भवं सुरगणैरभ्यर्च्यमानं सदा । सोमं सौम्यमुपासितं मुनिगणैरात्रेयगोत्रोद्भवं त्वां पूजार्थमिवाह्वयामि परमध्यानैकनिष्ठं विभुम् ॥ ॐ इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्येष्ठाय महते जानराज्याय इन्द्रस्य इन्द्रियाय इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एषवोऽमी राजा सोमोऽस्माकं ब्राह्मणानांगु राजा स्वाहा । आसनादि नैवेद्यान्तं पूजयेत् । पुष्पाञ्जलिः – नक्षत्रनाथ सुमनोहर शीतलांशो श्री भार्गवीप्रियसहोदर श्वेतमूर्ते । क्षीराब्धिजात रजनीकर चारुशील श्रीमत् शशांक मम देहि करावलम्बम् ॥ रोहिणीशः सुधामूर्तिः सुधागात्रः सुधासनः । विषमस्थानसंभूतां

पीडां हरतु मे विधुः॥ दिव्यशंखतुषाराभं क्षीरोदार्णवसम्भवम् । नमामि शशिनं देवं शम्भोर्मुकुटभूषणम् ॥ मंगलः - हस्ते रक्तपुष्पं गृहीत्वा श्रीभौमं स्मरेत् – प्रतप्तगांगेयनिभं ग्रहेशं सिंहासनस्थं कमलासिहस्तम् । सुरासुरैः पूजितपादपद्मं भौमं दयालुं हृदये स्मरामि ॥ किरीटिनं रक्तमाल्यं रक्तशूलगदाधरं चतुर्भुजं मेषगमनमवन्तिदेशजं वाशिष्ठगोत्रजं जमदग्न्यार्षं जगतीछन्दसं रक्ताम्बरधरं रक्ताभरणभूषितं रक्तगन्धानुलेपनं रक्तछत्रध्वजपताकिनं मुकुटकेयूरमणिशोभितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताभूमिसहितं प्रत्यधिदेवतास्कन्दसहितं त्रिकोणरक्तमण्डले दक्षिणमुखमंगारकमावाहयामि । आवाहनादिकं विधाय ॐ अंगारकाय विद्महे भूमिपुत्राय धीमहि तन्नो भौमः प्रचोदयात् । ॐ अग्निमूर्धेत्यस्य मन्त्रस्य जमदग्निऋषिः जगतीछन्दः भौमो देवता मंगलमहाग्रहस्य पूजने विनियोगः । ॐ अग्नि मूर्द्धादिवः अंगुष्ठाभ्यां नमः / हृदयाय नमः । ॐ ककुत्पति तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ पृथिव्या अयं मध्यमाभ्यां वषट् / शिखायै वषट् । ॐ अपां अनामिकाभ्यां हुम् / कवचाय हुम् । ॐ रेतांगुसि कनिष्ठाभ्यां वौषट् / नेत्राभ्यां वौषट् । ॐ जिन्वति करतलकरपृष्ठाभ्यां फट् /

अस्त्राय फट् । ध्यानम् - सिन्दूरद्युतिगैरिकादिमणिभं प्राभातिकार्कोपमं भारद्वाजसगोत्रमार्तिहरणं देवासुरैः पूजितम् । म्लेच्छे जातमनतभूतममलं ज्ञानस्फुरल्लोचनं भक्त्या मंगलमाह्वयामि विलसत् स्थूलाक्षमालाधरम् ॥ ॐ अग्नि मूर्द्धादिवः ककुत्पति पृथिव्या अयं अपांगु रेतांगुसि जिन्वति । आसनादि नैवेद्यान्तं पूजयेत् । पुष्पाञ्जलिः – रुद्रात्मजात बुधपूजित रौद्रमूर्ते ब्रह्मण्यमंगल धरात्मज बुद्धिशालिन् । रोगार्तिहार ऋणमोचक बुद्धिदायिन् श्रीभूमिजात मम देहि करावलम्बम् ॥ भूमिपुत्रो महातेजा जगतां भयकृत् सदा । वृष्टिकृत् वृष्टिहर्ता च पीडां हरतु मे कुजः ॥ धरणीगर्भसम्भूतं विद्युत्कान्तिसमप्रभम् । कुमारं शक्तिहस्तं च मंगलं प्रणमाम्यहम् ॥ वुधः - हस्ते पीतपुष्पाक्षतं गृहीत्वा श्रीबुधं स्मरेत् – सोमात्मजं हंसगतं द्विबाहुं शंखेन्दुरूपं ह्यसिपाशहस्तम् । दयानिधिं भूषणभूषितांगं बुधं स्मरे मानसपंकजेऽहम् ॥ ॐ किरीटिनं पीतमाल्यं पीतवर्णं कर्णिकारसमद्युतिं खड्गचर्मगदापाणिं सिंहस्थं वरदं मगधदेशजमत्रिगोत्रजं भारद्वाजार्षं बृहतीछन्दसं पीताम्बरधरं पीताभरणभूषितं पीतगन्धानुलेपनं पीतछत्रध्वजपताकिनं मुकुटकेयूरमणिभूषितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताविष्णुसहितं

प्रत्यधिदेवतानारायणसहितं पीतवर्णधनुश्शराराकृतिमण्डले उदङ्मुखं वुधमावाहयामि । आवाहनादिकं विधाय ॐ रोहिणेयाय विद्महे विधुसुताय धीमहि तन्नो बुधः प्रचोदयात् । ॐ उद्वुध्यस्वेत्यस्य मन्त्रस्य भरद्वाजऋषिः बृहतीछन्दः वुधो देवता वुधमहाग्रहस्य पूजने विनियोगः । ॐ उद्वुध्यस्वाग्ने अंगुष्ठाभ्यां नमः / हृदयाय नमः । ॐ प्रतिजागृहि तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ त्वमिष्टापूर्ते मध्यमाभ्यां वषट् / शिखायै वषट् । ॐ सं सृजेथामयं च अनामिकाभ्यां हुम् / कवचाय हुम् । ॐ अस्मिन्त्सधस्ते अध्युत्तरस्मिन् कनिष्ठाभ्यां वौषट् / नेत्राभ्यां वौषट् । ॐ विश्वे देवा यजमानश्च सीदत करतलकरपृष्ठाभ्यां फट् / अस्त्राय फट् । ध्यानम् - यन्नामस्मरणेन सिद्ध्यति नृणां शीघ्रं मनोवाञ्छितं संयातो मगधेऽर्चितः सुरगणैरात्रेयगोत्रो वुधः । हारिद्रद्रवसा च कुम्भविलसत् राजीवदेहद्युतिः सौम्यो ध्याननिमिलितार्कनयनः पूजार्थमागच्छतु ॥ ॐ उद्वुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्ते सं सृजेथामयं च अस्मिन्त्सधस्ते अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत । आसनादि नैवेद्यान्तं पूजयेत् । पुष्पाञ्जलिः – सोमात्मजात सुरसेवित सौम्यमूर्ते नारायणप्रिय मनोहर दिव्यकीर्ते । धीपाटवप्रद सुपण्डित चारुभाषिन् श्रीसौम्यदेव मम देहि करावलम्बम् ॥

उत्पातरूपो जगतां चन्द्रपुत्रो महाद्युतिः। सूर्यप्रियकरो विद्वान् पीडां हरतु मे बुधः ॥ प्रियंगुकलिकाश्यामं रूपेणाप्रतिमं बुधम् । सौम्यं सौम्यगुणोपेतं तं बुधं प्रणमाम्यहम् ॥ बृहस्पतिः - हस्ते पीतपुष्पं गृहीत्वा श्रीसुरगुरुं स्मरेत् – तेजोमयं शक्तित्रिशूलहस्तं सुरेन्द्रज्येष्ठैः स्तुतपादपद्मम् । मेधानिधिं हस्तिगतं द्विबाहुं गुरुं स्मरे मानसपंकजेऽहम् ॥ ॐ किरीटिनं पीतवर्णं चतुर्भुजं दण्डिवरदं साक्षसूत्रकमण्डलुं सिन्धुदेशजमांगिरसगोत्रं वासिष्ठार्षमनुष्टुप्छन्दसं पीताम्बरधरं पीताभरणभूषितं पीतगन्धानुलेपनं पीतछत्रध्वजपताकिनं मुकुटकेयूरमणिभूषितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतेन्द्रसहितं प्रत्यधिदेवताब्रह्मसहितं पीतपद्ममण्डले उदङ्मुखं गुरुमावाहयामि । आवाहनादिकं विधाय ॐ आंगिरसाय विद्महे सुराचार्याय धीमहि तन्नो जीबः प्रचोदयात् । ॐ बृहस्पते अतीत्यस्य मन्त्रस्य वशिष्ठऋषिः अनुष्टुप्छन्दः बृहस्पतिर्देवता बृहस्पतिमहाग्रहस्य पूजने विनियोगः । ॐ बृहस्पते अति यदर्यो अंगुष्ठाभ्यां नमः / हृदयाय नमः । ॐ अर्हात् द्युमद्विभाति तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ क्रतुमज्जनेषु मध्यमाभ्यां वषट् / शिखायै वषट् । ॐ यद्दीदयच्छवस अनामिकाभ्यां हुम् / कवचाय हुम् । ॐ ऋतप्रजात

कनिष्ठाभ्यां वौषट् / नेत्राभ्यां वौषट् । ॐ तदस्मासु द्रविणं धेहि चित्रम् करतलकरपृष्ठाभ्यां फट् / अस्त्राय फट् । ध्यानम् - यन्मत्रेण त्रिपिष्टपे प्रभुरसौ देवद्रुहं सन्ततं निःशेषं निजघान यस्य वचसा धातापि मूकायते । सिन्धौ जन्म च वाहनं च विहगो गोत्रं च यस्यांगिरा तप्ताष्टापदकान्तिमुज्ज्वलतनुं तं चाह्वये वाक्पतिम् ॥ ॐ बृहस्पते अति यदर्यो अर्हात् द्युमद्विभाति क्रतुमज्जनेषु यद्दीदयच्छ्वस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् । आसनादि नैवेद्यान्तं पूजयेत् । पुष्पाञ्जलिः – वेदान्तज्ञान श्रुतिवाच्यविभासितात्मन् ब्रह्मादिवन्दितगुरो सुरसेवितांघ्रे । योगीश ब्रह्मगुणभूषितविश्वयोने वागीश देव मम देहि करावलम्बम् ॥ देवमन्त्री विशालाक्षः सदा लोकहिते रतः । अनेकशिष्यसंपूर्णः पीडां हरतु मे गुरुः ॥ देवानां च ऋषीणां च गुरुं काञ्चनसन्निभम् । वन्द्यभूतं त्रिलोकेशं तं गुरुं प्रणमाम्यहम् ॥ शुक्रः -हस्ते शुक्लपुष्पं गृहीत्वा श्रीशुक्रं स्मरेत् – सन्तप्तकांचननिभं द्विभुजं दयालुं पीताम्बरं धृतसरोरुहद्वन्द्वशूलम् । क्रौञ्चासनं ह्यसुरसेवितपादपद्मं शुक्रं स्मरे द्विनयनं हृदि पंकजेऽहम् ॥ ॥ ॐ किरीटिनं श्वेतवर्णं चतुर्भुजं दण्डिनं वरदं काव्यं साक्षसूत्रकमण्डलुं कीकटदेशजं भार्गवगोत्रजं शौनकार्षं पंक्तिछन्दसं श्वेताम्बरधरं श्वेताभरणभूषितं श्वेतगन्धानुलेपनं

श्वेतछत्रध्वजपताकिनं मुकुटकेयूरमणिशोभितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवेन्द्रसहितं प्रत्यधिदेवेन्द्राणीसहितं शुक्लचतुष्कोणमण्डले प्राङ्मुखं भगवन्तं शुक्रमावाहयामि । आवाहनादिकं विधाय ॐ उशनस्यै विद्महे भृगुपुत्राय धीमहि तन्नः शुक्रः प्रचोदयात् । ॐ अन्नात्परिस्रुतोरस इत्यस्य मन्त्रस्य शौनकऋषिः पंक्तिछन्दः श्रीशुक्रो देवता शुक्रमहाग्रहस्य प्रीत्यर्थं पूजने विनियोगः । ॐ अन्नात्परिस्रुतो रसं ब्रह्मणा अंगुष्ठाभ्यां नमः / हृदयाय नमः । ॐ व्यपिवत् क्षत्रं तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ पयः सोम प्रजापतिः मध्यमाभ्यां वषट् / शिखायै वषट् । ॐ ऋतेन सत्यमिन्द्रियं अनामिकाभ्यां हुम् / कवचाय हुम् । ॐ विपानं शुक्रमन्धस कनिष्ठाभ्यां वौषट् / नेत्राभ्यां वौषट् । ॐ इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु करतलकरपृष्ठाभ्यां फट् / अस्त्राय फट् । ध्यानम् - सर्वे यस्य सुरारिनाथनिवहाः पादारविन्दानता गोत्रं यस्य च भार्गवः सुरगणैरद्यापि यः शक्यते । जातो भोजकटे च यस्य विकसत् कुन्दावदातद्युतिः शुक्रः शक्रपराजितः प्रभुरसौ पूजार्थमागच्छतु ॥ ॐ अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिवत् क्षत्रं पयः सोम प्रजापतिः ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं

मधु । आसनादि नैवेद्यान्तं पूजयेत् । पुष्पाञ्जलिः –उल्लासदायक कवे भृगुवंशजात लक्ष्मीसहोदर कलात्मक भाग्यदायिन् । कामारिरागकर दैत्यगुरो सुशील श्रीशुक्रदेव मम देहि करावलम्बम् ॥ दैत्यमन्त्री गुरुस्तेषां प्राणदश्च महामतिः । प्रभुस्ताराग्रहाणां च पीडां हरतु मे भृगुः ॥ हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम् । सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ॥ शनिः -हस्ते कृष्णपुष्पं गृहीत्वा श्रीशनिं स्मरेत् –नीलाञ्जनाभं मिहिरेष्टपुत्रं ग्रहेश्वरं पाशभुजंगपाणिम् । सुरासुराणां भयदं द्विबाहुं शनिं स्मरे मानसपंकजेऽहम् ॥ ॐ किरीटिनमिन्द्रनीलसमद्युतिं शूलधरं वरदं गृध्रवाहनं सवाणशरधरं सौराष्ट्रदेशजं काश्यपगोत्रजं भृग्वार्षं गायत्रीछन्दसं कृष्णाम्बरधरं कृष्णाभरणभूषितं कृष्णगन्धानुलेपनं कृष्णछत्रध्वजपताकिनं मुकुटकेयूरमणिशोभितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतायमसहितं प्रत्यधिदेवताप्रजापतिसहितं कृष्णखड्गाकृतिमण्डले प्रत्यङ्मुखं शनैश्चरमावाहयामि । आवाहनादिकं विधाय ॐ शनैश्चराय विद्महे सूर्यपुत्राय धीमहि तन्नः सौरिः प्रचोदयात् । ॐ शन्नोदेवीरित्यस्य मन्त्रस्य भृगुऋृषिः गायत्री छन्दः श्रीशनैश्चरो देवता शनिमहाग्रहप्रीत्यर्थं पूजने विनियोगः । ॐ शन्नोदेवी अंगुष्ठाभ्यां

नमः / हृदयाय नमः । ॐ रभिष्टय तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ आपो भवन्तु मध्यमाभ्यां वषट् / शिखायै वषट् । ॐ पीतये अनामिकाभ्यां हुम् / कवचाय हुम् । ॐ शं यो कनिष्ठाभ्यां वौषट् / नेत्राभ्यां वौषट् । ॐ अभिस्रवन्तु नः करतलकरपृष्ठाभ्यां फट् / अस्त्राय फट् । ध्यानम् - यः सौराष्ट्रसमुद्भवः कृशतनुर्भिन्नांजनालिप्रभः खञ्जः पाशधरो लसत्कपिलदृक् कृष्णाम्बरो दुर्मतिः । छायागर्भसमुद्भवो रविसुतः क्रूरो विरुद्धक्रियो गोत्रं यस्य च काश्यपः स भगवान् पूजार्थमागच्छतु ॥ ॐ शन्नोदेवीरभिष्टय आपो भवन्तु पीतये शं योरभि स्रवन्तु नः । आसनादि नैवेद्यान्तं पूजयेत् । पुष्पाञ्जलिः – शुद्धात्मज्ञानपरिशोभितकालरूप छायासुनन्दन यमाग्रज क्रूरचेष्ट । कष्टाद्यनिष्टकर धीवर मन्दगामिन् मार्तण्डजात मम देहि करावलम्बम् ॥ सूर्यपुत्रो दीर्घदेहो विशालाक्षः शिवप्रियः । मन्दचारः प्रसन्नात्मा पीडां हरतु मे शनिः ॥ नीलांजनसमाभासं रविपुत्रं यमाग्रजम् । छायामार्तण्डसम्भूतं तं नमामि शनैश्चरम् ॥ राहुः - हस्ते नीलपुष्पं गृहीत्वा श्रीराहुं स्मरेत् – शीतांशुमित्रान्तकमीड्यरूपं घोरं च वैडुर्यनिभं द्विबाहुम् । त्रैलोक्यरक्षाप्रदमिष्टदं तं राहुं ग्रहेन्द्रं हृदये स्मरामि ॥ ॐ किरीटिनं करालवदनं खड्गचर्मशूलधरं

सिंहासनस्थं कौशद्वीपजं पाटलिगोत्रमांगिरसार्षमनुष्टुप्छन्दसं कृष्णाम्बरधरं कृष्णाभरणभूषितं कृष्णगन्धानुलेपनं कृष्णछत्रध्वजपताकिनं मुकुटकेयूरमणिशोभितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताकालसहितं प्रत्यधिदेवतासर्पसहितं कृष्णमकराकृतिमण्डले दक्षिणामुखं राहुमावाहयामि । आवाहनादिकं विधाय ॐ विधुन्तुदाय विद्महे सैंहिकेयाय धीमहि तन्नो राहुः प्रचोदयात् । काण्डात् काण्डादित्यस्य मन्त्रस्य अंगिराऋषिः अनुष्टुप् छन्दः राहुर्देवता राहुमहाग्रहप्रीत्यर्थं पूजने विनियोगः । ॐ काण्डात्काण्डात् अंगुष्ठाभ्यां नमः / हृदयाय नमः । ॐ प्ररोहन्ति तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ परुषः मध्यमाभ्यां वषट् / शिखायै वषट् । ॐ परुषस्परि अनामिकाभ्यां हुम् / कवचाय हुम् । ॐ एवानो दूर्वे प्रतनु कनिष्ठाभ्यां वौषट् / नेत्राभ्यां वौषट् । ॐ सहस्रेण शतेन च करतलकरपृष्ठाभ्यां फट् / अस्त्राय फट् । ध्यानम् - सम्बर्ताम्बुदनीलनिर्जिततनुः स्निग्धाञ्जनालिप्रभः चन्द्रार्कोधृतपाणिरानतमुखो दंष्ट्रा करालोज्ज्वलः । शाकद्वीपसमुद्भवोऽमृतरसा स्वादीशिरो मात्रकः सिंहीसूनुरयं च योऽपि भगवान् पैठीनसीयः प्रियः ॥ ॐ काण्डात्काण्डात्प्ररोहन्ति परुष परुषस्परि एवानो दूर्वे प्रतनु सहस्रेण शतेन च । आसनादि

नैवेद्यान्तं पूजयेत् । पुष्पाञ्जलिः –मार्तण्डपूर्णशशिमर्दकरौद्रवेश सर्पाधिनाथ सुरभिकर दैत्यजन्म । गोमेधिकाभरणभासित भक्तिदायिन् श्रीराहुदेव मम देहि करावलम्बम् ॥ महाशिरा महावक्त्रो दीर्घदंष्ट्रो महाबलः । अतनुश्चोर्ध्वकेशश्च पीडां हरतु मे शिखी ॥ मलयाचलसंजातमर्धकायं महासुरम् । सिंहिकागर्भसम्भूतं तं राहुं प्रणमाम्यहम् ॥ केतुः - हस्ते धूम्रपुष्पं गृहीत्वा श्रीकेतून् स्मरेत् – लांगुलयुक्तं भयदं जनानां कृष्णाम्बुभृत्सन्निभमेकवीरम् । कृष्णाम्बरं शक्तित्रिशूलहस्तं केतुं भजे मानसपंकजेऽहम् ॥ ॐ धूम्रान् द्विबाहून् पाशधरान् विकृताननान् गृध्रवाहनान् किरीटिनो कौशद्वीपजान् जैमिनिगोत्रजान् गौतमार्षान् नानाच्छन्दश्चित्राम्बरधरान् चित्राभरणभूषितान् चित्रगन्धानुलेपनान् कृष्णपिंगलध्वजपताकिनो मुकुटकेयूरमणिशोभितानारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणान् ग्रहमण्डले प्रविष्टानधिदेवताचित्रगुप्तसहितान् प्रत्यधिदेवताब्रह्मसहितान् कृष्णसर्पाकृतिमण्डले दक्षिणामुखान् केतूनावाहयामि । आवाहनादिकं विधाय ॐ धूम्रासनाय विद्महे धूम्रवर्णाय धीमहि तन्नः केतुः प्रचोदयात् । ॐ केतुं कृण्वन्नित्यस्य मन्त्रस्य गौतम ऋषिः नानाच्छन्दांसि केतवो देवताः केतुमहाग्रहाणां प्रीत्यर्थं पूजने

विनियोगः । ॐ केतुं कृण्वन् अंगुष्ठाभ्यां नमः / हृदयाय नमः । ॐ अकेतवे तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ पेशो मर्या मध्यमाभ्यां वषट् / शिखायै वषट् । ॐ अपेशसे अनामिकाभ्यां हुम् / कवचाय हुम् । ॐ समुषद्भिः कनिष्ठाभ्यां वौषट् / नेत्राभ्यां वौषट् । ॐ अजायथाः करतलकरपृष्ठाभ्यां फट् / अस्त्राय फट् । ध्यानम् - कल्पान्तोदितभास्करद्युतिनिभः अम्भोजधूम्रद्युतिः कौशद्वीपभवोऽपि ब्रह्मतनयः सूर्यप्रभामण्डलः । केतुर्जैमिनीगोत्रजप्रभुरसौ खड्गप्रभाभासुरः ताराखेचरमर्दनः स भगवान् पूजार्थमागच्छतु ॥ ॐ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे समुषद्भिरजायथाः । आसनादि नैवेद्यान्तं पूजयेत् पुष्पाञ्जलिः –आदित्यसोमपरिपीडक चित्रवर्ण हे सिंहिकातनय वीर भुजंगनाथ । मन्दस्य मुख्यसखधीवर मुक्तिदायिन् श्रीकेतुदेव मम देहि करावलम्बम् ॥ अनेकरूपवर्णैश्च शतशोऽथ सहस्रशः । उत्पातरूपो जगतां पीडां हरतु मे तमः ॥ पलाशपुष्पसंकाशं तारकाग्रहमस्तकम् । रौद्रं रौद्रात्मकं घोरं तं केतुं प्रणमाम्यहम् ॥ एकतन्त्रेण षोडशोपचारपूजा- आवाहनम्- आगच्छन्तु महाभागाः खेचराः ग्रहदेवताः । गृह्णाध्वं वाङ्मयीं पूजां कुरुध्वं मम मंगलम् ॥ आसनम्- वर्त्तुलं चार्धचन्द्रं च त्रिकोणं धनुरांकितम् । पद्मं चातुरस्रं खड्गं मकरं सर्पचिह्नितम् । आसनानि

स्वीकुरुथ नवग्रहाः नमोऽस्तुते ॥ स्वागतम्- स्वागतं भो देवदेवाः गृह्णन्तु मम पूजनम् । वाङ्मयं पूजनं कूर्वे पश्यन्तु दाससेवनम् ॥ पाद्यम्- तीर्थतोयं समानीतं पादक्षालनहेतवे । प्रक्षालयन्तु भो देवाः युष्मभ्यं वै नमोनमः ॥ अर्घ्यम्- गन्धपुष्पाक्षतैर्युक्तमर्घ्यं संपादितं मया । हस्तप्रक्षालनार्थाय गृह्णन्तु खेचराऽमराः ॥ आचमनम्- मन्दाकिनीतोयं दिव्यं सुमिष्टं पापक्षालनम् । मुखप्रक्षालनार्थाय गृह्णन्तु रसमौषधम् ॥ मधुपर्कः- दधिमधुघृतैर्युक्तं कांस्ये कांस्येन पिहितम् । गृह्णन्तु खेचराः सर्वे मधुपर्कं सुमिष्टकम् ॥ स्नानीयम् – गंगादिसलिलैः शुद्धैः शीतलैः सुमनोहरैः । स्नापयामि ग्रहान् सर्वान् कुर्वन्तु कुशलं मम ॥ क्षीरस्नानम्- गोक्षीरैर्धवलैः शुद्धैःशीतलैः सुमनोहरैः । स्नापयामि युष्मान् देवाः सीदन्तु परमेश्वराः ॥ दधिस्नानम्- दध्याम्लेन सुवासेन सुमिष्टेन च राजसा । स्नपनं करोमि देवाः गृह्णीत परमेश्वराः ॥ घृतस्नानम्- नवनीतसमुत्पन्नं गव्यं यत् घृतमौषधम् । तेन शुद्धेन दिव्येन स्नापयामि सुरेश्वराः ॥ मधुस्नानम्- मधुरेण सुवासेन नानापुष्परसेन च । मधुना स्नापयिष्यामि गृह्णन्तु खेचराः ग्रहाः ॥ शर्करास्नानम्- इक्षुरसेन शुद्धेन मिष्टेन शीतलेन च । खण्डेन स्नापयिष्यामि सीदन्तु ग्रहनायकाः ॥ पञ्चामृतस्नानम्- पयोदधिघृतं चैव मधु च शर्करायुतम् । पञ्चामृतं मयानीतं गृह्णाध्वं

स्नानमुत्तमम् ॥ शुद्धस्नानम्- नानातीर्थोद्भवं वारि शीतलं सुमनोहरम् । तदिदं कल्पितं स्नानं गृह्णन्तु विबुधाऽमराः ॥ वस्त्रम्- अरुणं च सितं रक्तं पीतं कृष्णं नीलं तथा । धूम्रं कौषेयवस्त्राणि गृह्णाध्वं खेचरेश्वराः ॥ यज्ञसूत्रम्- नवतन्तुसमायुक्तं त्रैगुण्यं देवतामयम् । उपवीतं प्रयच्छामि गृह्णाध्वं खेटपुंगवाः ॥ गन्धम्- गन्धाष्टकं च दिव्यं च यक्षकर्दममिश्रितम् । विलेपनार्थं दास्यामि गृह्णन्तु ग्रहगोचराः ॥ सिन्दूरम्- सिन्दूरं च मया दत्तं जवावर्णं मनोहरम् । गृह्णन्तु देवताः सर्वे कुर्वन्तु मम मंगलम् ॥ अक्षताः – कुंकुमलेपितान् यवान् अगरुजलसिञ्चितान् । अक्षतान् तण्डुलैर्युक्तान् गृह्णाध्वं खचराऽमराः ॥ आभूषणम्- किरीटं कुण्डलं दिव्यं भूषणं हैमराजतम् । नवरत्नसमायुक्तं गृह्णाध्वं खचराऽमराः ॥ पुष्पम्- पद्मं करवीरं कुन्दं कुमुदं जातिमल्लिका । जवाचम्पकपुष्पाणि गृह्णन्तु भो सुरेश्वराः ॥ माल्यपुष्पम्- नानावर्णमयैर्दिव्यैः सुगन्ध्यैः कुसुमान्वित्यैः । सूत्रेण ग्रथितं माल्यं गृह्णाध्वं नवदेवताः ॥ तुलसीपत्रम्- दिव्यं यत्तुलसीपत्रं विष्णुप्रियतमं शुभम् । युष्मभ्यं संप्रयच्छामि गृह्णाध्वं ग्रहनायकाः ॥ अक्षुर्णं मालुरपत्रं धूर्जटिप्रियकारकम् । युष्मभ्यं वै प्रयच्छामि सीदन्तु ग्रहगोचराः ॥ आवरणपूजा- ॐ रुद्राय नमः पूजयामि तर्पयामि । एवं उमायै ,

स्कन्दाय , विष्णवे , ब्रह्मणे , इन्द्राय , यमाय , कालाय , चित्रगुप्ताय नमः । ॐ अभीष्टसिद्धिं मे दत्त शरणागतपालकाः । भक्त्या समर्पये सम्यक् प्रथमामावरणार्चनम् ॥ द्वितीयावरणम्- ॐ अग्नये नमः , अद्भ्यो , पृथीव्यै , नारायणाय , इन्द्राय , इन्द्राण्यै , प्रजापतये , सर्पाय , ब्रह्मणे नमः । ॐ अभीष्टसिद्धिं----द्वितीयावरणार्चनम् ॥ तृतीयावरणम्- ॐ छायायै नमः , रोहिण्यै , उर्वश्यै , सोमाल्यै , इलायै , मेनकायै , चित्रावत्यै , रात्र्यै , काल्यै नमः । ॐ अभीष्टसिद्धिं----तृतीयावरणार्चनम् ॥ चतुर्थावरणम्- ॐ कश्यपाय नमः , अत्रये , भरद्वाजाय , चन्द्राय , ब्रह्मणे , भृगवे , सूर्याय नमः । ॐ अभीष्टसिद्धिं----चतुर्थावरणार्चनम् ॥ पञ्चमावरणम्- ॐ अदित्यै नमः , अनसूयायै , धरायै , तारायै , गायत्र्यै , छायायै , सिंहिकायै नमः । ॐ अभीष्टसिद्धिं----पंचमावरणार्चनम् ॥ षष्ठावरणम्- ॐ नृसिंहाय नमः , रामाय , पर्शुरामाय , कूर्माय , वराहाय , कल्किने , मत्स्याय , वामनाय , कृष्णाय , बुद्धाय नमः । ॐ अभीष्टसिद्धिं----षष्ठआवरणार्चनम् ॥ सप्तमावरणम्- ॐ मातंगिन्यै नमः , भुवनेश्वर्यै , वगलायै , त्रिपुरसुन्दर्यै , तारायै , कमलात्मिकायै , दक्षिणकालिकायै , छिन्नमस्तायै , धूमावत्यै , भैरव्यै । ॐ अभीष्टसिद्धिं----सप्तमावरणार्चनम् ॥ अष्टमावरणम्- ॐ

सप्ताश्वरथाय नमः , दशाश्वरथाय , पाण्डुरमेषाय , सिंहाय , रक्तपादश्वेतहंसाय , मण्डुकाय , गृध्राय , कपोताय नमः । ॐ अभीष्टसिद्धिं----अष्टमावरणार्चनम् ॥ नवमावरणम्- ॐ कलिंगाय नमः , यामुनाय , आवन्तये , मागधाय , सिन्धुदेशाय , भोजकटाय , सौराष्ट्राय , पाठिनाय , कौशद्वीपाय नमः । ॐ अभीष्टसिद्धिं----नवमावरणार्चनम् ॥ धूपः- गुडत्वक् गुग्गुलं यक्षं सिंहलं पद्ममागुरम् । दशांगानि प्रदेयानि धूपानि प्रीतिहेतवे ॥ दीपः – सुवर्णदीपं तु शुद्धं गव्यमाज्येन पूरितम् । वर्तिवह्निसमायुक्तं गृह्णाध्वं भाग्यनायकाः ॥ नैवेद्यम्- द्राक्षानारंगजम्बीरपुगिजातिफलानि च दाडिमं नारिकेलेक्षुं गृह्णाध्वं खचराऽमराः ॥ बलिः – गुडदधिघृतैर्युक्तमोदनं घृतपायसम् । चित्रान्नमजमांसं च बलिं गृह्णन्तु सादरम् ॥ पानीयम्- अतितृप्तिकरं पेयं शर्करापरिपूरितम् । पानार्थं भो प्रदास्यामि गृह्णाध्वं खचराऽमराः ॥ ताम्बुलम्- एलालवंगकर्पूरं पानपत्रेण योजितम् । पुगिफलसमायुक्तं ताम्बुलं चास्तु शोभनम् ॥ ॠतुफलम्- नानास्वादुसमेतानि ॠतुकालानि यानि च । तानि फलानि पक्वानि गृह्णन्तु ग्रहपुंगवाः ॥ दक्षिणा- कृष्णा च कपिलां धेनुं श्वेताश्वं पीतवाससम् । वृषं शंखं हेमं खड्गं छागं दास्येहं दक्षिणाम् ॥ आरात्रिकम् - चन्द्रादित्यौ च धरणी

विद्युदग्निस्तथैव च । त्वमेव सर्वज्योतिंषि आर्तिकं प्रतिगृह्यताम् । कदलीगर्भसम्भूतं कर्पूरन्तु प्रदीपितम् । आरार्त्तिकमहं कुर्वे पश्य मे वरदो भव ॥ ॐ इदं हविः प्रजननं मे अस्तु दशवीरँ स्वस्तये । आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि । अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतोऽअस्मासु धत्त ॥ ॐ आ रात्रि पार्थिवगुं रजः पितुरप्रायि धामभिः । दिवः सदागुंसि बृहती वितिष्ठस आत्वेषं वर्तते तमः ॥ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् । सदावसन्तं हृदयारविन्दे भवं भवानि सहितं नमामि ॥ पुष्पाञ्जलिः- सूरः सुरपदं रुचिं हिमरुचिः सन्मंगलं मंगलो वोधं बोधनमातनोतु ललितावाचश्च वाचस्पतिः । काव्यं काव्यकलां कलापतिरतिं मन्दो द्विषन्मन्दतां दुर्वृत्तेषु तमस्तमो जयकरी केतुश्च केतुस्त्रियम् ॥ ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुशशिभूमिसुतो बुधश्च । गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः शान्तिकराः भवन्तु ॥ सूर्यरूपी नृसिंहश्च रामचन्द्रस्तु चन्द्रमा । पर्शुरामस्तथा भौमो वामनश्च बुधस्तथा ॥ जीवश्च बलभद्रो वै शुक्रः शूकररूपधृक् । कल्किरूपी च सौरिस्तु राहुश्च बुद्ध एव च ॥ केतुस्तु कूर्मरूपी च लग्नं वै विष्णुरूपकः । य एतान् चिन्तयेत्तस्य ग्रहरूपी जनार्दनः । सर्वारिष्टविनाशं च यथोक्तफलदो भवेत् ॥ अनया पूजया नवग्रहाः प्रीयन्ताम् ।

.....................................................................